श्रीः శ్రీః

# विज्ञानदीपिका

# విజ్ఞానదీపికా

వివృతివ్యాఖ్యానసహితా - विवृतिव्याख्यानसहिता

సంస్కృతమూలం : శ్రీపద్మపాదాచార్యః

संस्कृतमूलम्ः श्रीपद्मपादाचार्यः





संस्कृतभाषाप्रचारसमितिः

हैदराबाद्

श्रीः శ్రీః

# विज्ञानदीपिका

# విజ్ఞానదీపికా

వివృతివ్యాఖ్యానసహితా - विवृतिव्याख्यानसहिता

సంస్కృతమూలం : శ్రీపద్మపాదాచార్యః

संस्कृतमूलम्: श्रीपद्मपादाचार्यः





संस्कृतभाषाप्रचारसमितिः

हैदराबाद्

శ్రీః

# विज्ञानदीपिका విజ్ఞానదీపికా

వివృతివ్యాఖ్యానసహితా - विवृतिव्याख्यानसहिता

సంస్కృతమూలం: శ్రీపద్మపాదాచార్యః

संस्कृतमूलम्: श्रीपद्मपादाचार्यः

प्रथम मुद्रणम्:- 23-07-2009

ప్రతులు : 500

పేజీలు : 96

వెల రూ. : రూ.50-00


1. R. Mohana Rao,
4-103, ILTD Colony Extn.,
Kothapet, CHIRALA - 523 157
Ph : 94401 15411

2. Dr. Nadipineni Suryanarayana,
Principal, Retired
Near Sailaja Theatre,
Siri Nagar, KANDUKURU-523 105
Ph : 08598 - 224168

3. Samskrutha Basha Prachara Samitha,
Near Harerama Hare Krishna Temple,
Abids - Nampally Station Road,
HYDERABAD - 1

***D.T.P. by :-***

**J. RAJA**
18, Banam Complex,
Munthavari Centre, Chirala.
Cell : 98483 90564

***Printed at :-***

**SURYA OFFSET,**
CHIRALA.

# PREFACE

A vivid and beautiful handwritten carbon copy of **Vijnaana – Deepikaa** with **Vivriti** commentary in Devanaagari script, authored by Sri Padmapadaachaarya, a disciple of **Sri Jagadguru Sankaraacharya**, was received long ago in 1960s from **Brahma Sree VRL Sarma** of Bombay, by **Dr. Nadipineni Suryanarayana**, Retired Principal, Kandukur in the Prakasam District of Andhra Pradesh.

The said manuscript was given to me for publication with Telugu Commentary in the monthly **"Aatma-Jyothi"** as I am its honorary editor. Mr. Chintagunta Subba Rao translated it into Telugu in a free style, and the same is now being serialised in the said Journal. It is brought out in a book form by **Sri Sadasivabrahmendra Saraswathi Ashram**, Chillakallu with the financial aid of Dr. Nadipineni Suryanarayana and with the blessings of Sri Sri sri Arulananda Swamiji.

Now it is in your hands in **Devanagari** to go through. The book discusses the cycle of birth and action **(Janma – Karma)**. The seeker of birthlessness **(Janmaraahitya)** must necessarily alienate himself / herself from the fruits of **Karma** or his / her deeds. What are the remedial measures suggested? This discussion answers this question which concerns one and all, as all mankind is infested with the multitudinous sorrows of birth-life-and-death process.

This book is published by **Samskrita-bhashaa-prachaara-samithi**, Hyderabad, with the financial aid of **Sri Nadipineni Suryanarayana,** who are duly thanked alongwith the translator of the Telugu version.

The universality of the subject has encouraged the publishers of this book. It is hoped that all readers will become knowledgeable and reap the fruits of this knowledge.

**R. MOHAN RAO**
Lecturer, Govt. Degree College
Kandukuru.

# भूमिका

ग्रन्थोऽयं श्री शङ्करभगवत्पादप्रियशिष्येण श्री पद्मपादाचार्येण संस्कृते श्लोकरूपे प्रणीतः। श्री आचार्यः तदध्ययनसहकारिव्याख्यामपि विवृतिनाम्नीं प्रसादितवान् । अत्र जन्मपरम्परानिवृत्तिः कथं वा भवेदिति विपुलं चिन्तितम्। एवमस्य विषयो विश्वजनीनः। सर्वेऽपि दर्शनानुयायिनस्तस्मिन् श्रद्धाळुव एवेति मन्यते ।

अस्य ग्रन्थस्य मूलपाठः श्री वि.आर्.यल्. शर्मणः सकाशात् श्री नडिपिनेनि वंश्येन सूर्यनारायणमहोदयेन १९६० दशके प्राप्तः। पश्चान्मम हस्तमागतः यतोऽहं "आत्मज्योति" रिति पत्रिकायाः गौरवसम्पादकः उपस्थितः। ग्रन्थस्तु श्री चिन्तगुण्टवंश्येन सुब्बरायेण कृतान्ध्रानुवादसहितः मासि मासि पत्रिकायां धारावाहितः।

श्री श्री श्री अरुळानन्दस्वामिन श्विल्लकल्लुग्रामस्थस्य श्री सदाशिवब्रह्मेन्द्र सरस्वत्याश्रमस्वामिन आशिषा च श्री नडिपिनेनि वंशजस्य सूर्यनारायण महोदयस्य आर्थिकसहायेन पुस्तकरूपमाधत्ते आन्ध्रानुवादसहितो आन्ध्रालिप्यां मुद्रितो 'विज्ञानदीपिका'। पुनरप्यद्य एतन्मुद्रणावसरे कृषिकास्सर्वे कृतज्ञताञ्जलिना सम्मानिताः।

विज्ञानदीपिकोज्ज्वालिते मार्गे चरन् मुमुक्षवस्साधकाः लक्ष्यसिद्धिं व्रजन्तीति आशां कुर्महे ।

रा मो रा

श्रीः

శ్రీః

# विज्ञानदीपिका

# విజ్ఞానదీపికా

వివృతివ్యాఖ్యానసహితా - विवृतिव्याख्यानसहिता

## ప్రార్థనా प्रार्थना

శ్లో॥ వన్దే సామ్బం సదానన్దమ్
ఆనన్దావరణాపహమ్।
తత్త్వావలమ్బనార్థాయ
మహాదేవం ధృతాకృతిమ్॥

శ్రీభగవత్కృపోపస్థితవేదాన్తవిదాచార్యశిరోమణి శ్రీభగవదవతారభగవచ్ఛఙ్కరాచార్యచరణానుగ్రహవిజ్ఞాతపరాపరాత్మతత్త్వః శ్రీపద్మపాదాచార్యః తత్త్వానుసన్ధానలక్షణమఙ్గలం శిష్యోపశిష్యశిక్షాయై కర్తవ్యసత్ప్రకరణోపక్రమే నిబధ్నాతి-

श्लो॥ वन्दे साम्बम् सदानन्दम्
आनन्दावरणापहम् ।
तत्त्वावलम्बनार्थाय
महादेवं धृताकृतिम् ॥

श्रीभगवत्कृपोपस्थितवेदान्तविदाचार्यशिरोमणि श्रीभगवदवतारभगवच्छङ्कराचार्यचरणानुग्रहविज्ञातपरापरात्मतत्त्वः श्रीपद्मपादाचार्यः तत्त्वानुसन्धानलक्षणमङ्गलं शिष्योपशिष्यशिक्षायै कर्तव्यसत्प्रकरणोपक्रमे निबध्नाति –

श्लो॥ ब्रह्मभिः प्रतिपाद्यम् यद् ब्रह्मभिर्ब्रह्मसंयुतैः ।
चिन्तितं कर्मनिर्मुक्त्यै तद् ब्रह्म हृदि भावये ॥ १

ब्रह्मभिरिति । तत् प्रसिद्धं ब्रह्म व्यापकं चैतन्यं हृदि हृदये भावये चिन्तये। किं भूतम्? ब्रह्मभिः वेदशिरोभिः प्रतिपाद्यं अतन्निरसनमुखेन लक्षितमित्यर्थः। पुनश्च कीदृशं ब्रह्म? ब्रह्मभिः तपोभिः संयुतैः सम्यक् सम्पन्नैः ब्रह्मभिः ब्रह्मज्ञानिभिः कर्मणां सञ्चित-सञ्चीयमान-प्रारब्धानां निर्मुक्त्यै निःशेषेण समाप्त्यर्थं चिन्तितमात्मस्वरूपत्वेन ध्यातम् ॥

ब्रह्मभिः प्रतिपाद्यमित्यनेनास्य प्रकरणस्य प्रतिपाद्य प्रतिपादितभावः सम्बन्धो दर्शितः। ब्रह्मसंयुतैरित्यनेनाधिकारी सूचितः - कर्मनिर्मुक्त्यै इत्यनेन कर्मनिर्हारलक्षणं प्रयोजनमुक्तम् । तद् ब्रह्म इत्यनेन ब्रह्मणः सद् वृत्तिव्याप्यत्वेन तस्य ध्यातृध्येययोर्वा ऐक्यस्य विषयत्वमभिहितम् । महानुभावनिरूपितस्य समासस्यापि प्रकरणस्य संहितानुगतसदनुबन्धादिलक्षणैरेव भाव्यत्वादिति भावः।

శ్లో॥ బ్రహ్మభిః ప్రతిపాద్యం యద్ బ్రహ్మభిర్బ్రహ్మసంయుతైః
చిన్తితం కర్మనిర్ముక్త్యై తద్ బ్రహ్మ హృది భావయే॥ 1

బ్రహ్మభిరితి। తత్ ప్రసిద్ధం బ్రహ్మ వ్యాపకం చైతన్యం హృది హృదయే భావయే చిన్తయే। కిం భూతమ్? బ్రహ్మభిః వేదశిరోభిః ప్రతిపాద్యం అతన్నిరసనముఖేన లక్షితమిత్యర్థః। పునశ్చ కీదృశం బ్రహ్మ? బ్రహ్మభిః తపోభిః సంయుతైః సమ్యక్ సమ్పన్నైః బ్రహ్మభిః బ్రహ్మజ్ఞానిభిః కర్మణాం సఞ్చిత-సఞ్చీయమాన-ప్రారబ్ధానాం నిర్ముక్త్యై నిఃశేషేణ సమాప్త్యర్థం చిన్తితమాత్మస్వరూపత్వేన ధ్యాతమ్॥

బ్రహ్మభిః ప్రతిపాద్యమిత్యనేనాస్య ప్రకరణస్య ప్రతిపాద్య ప్రతిపాదితభావః సమ్బన్ధో దర్శితః। బ్రహ్మసంయుతైరిత్యనేనాధికారీ సూచితః-కర్మనిర్ముక్త్యై ఇత్యనేన కర్మనిర్హారలక్షణం ప్రయోజనముక్తమ్। తద్ బ్రహ్మ ఇత్యనేన బ్రహ్మణః సద్వృత్తి-వ్యాప్యత్వేన తస్య ధ్యాతృధ్యేయయోర్వా ఐక్యస్య విషయత్వమభిహితమ్। మహానుభావ-నిరూపితస్య సమాసస్యాపి ప్రకరణస్య సంహితానుగతసదనుబన్ధాదిలక్షణైరేవ భావ్యత్వాదితి భావః॥

अवतारिकाः- पुनरपि परा-पश्यन्ती-मध्यमा-वैखरीलक्षणशब्दवृत्त्या अकाराद्यक्षर-रूपेण स्वयमेव विवर्ततामिव प्राप्तं ब्रह्म एव मङ्गलान्तरत्वेन प्रणमति ।

श्लो।। वाचे ब्रह्मस्वरूपायै पञ्चाशद्वर्णभेदतः।
अनेकरूपमाप्तायै नमो मात्रे त्रिमूर्तये ।। २

वाच इति । मात्रे सकलचराचरजगज्जनन्यै वाचे सरस्वत्यै नमः। किं भूतायै? पञ्चाशद्वर्णभेदतः लिप्या, आकृत्या, स्थानेन उच्चारणेन वा भिन्नत्वेन स्वसमानैः अकारादि षोडश, ककारादि पञ्चविंशतिः, यकारादि नव इत्येवं पञ्चाशत् सङ्ख्याकैः वर्णैः अनेकरूपां परा-पश्यन्ती-मध्यमा-वैखरी-लक्षण-शब्दवृत्त्या, चराचररूपेण वा विविधाकृतिमाप्तायै, अत एव त्रिमूर्तये त्रयोऽकार-उकारमकाराः मूर्तयः यस्याः, तदधिष्ठातारो हरिहरविधातारो वा मूर्तयो यस्याः, सत्त्वरजस्तमोगुणा वा मूर्तय उपाधयो यस्यास्तस्यै ।।

यद्वा तिस्रो भूराद्या व्याहृतयो वह्निसूर्यसोमकला वा मूर्तयो यस्याः त्रीणि पदानि यस्यां गायत्र्यां सा मूर्तिः यस्याः, त्रयो लोका सन्ति यस्मिन् ब्रह्माण्डे तन्मूर्तिः यस्याः, त्रयो ह्रस्वदीर्घप्लुता उदात्तानुदात्तस्वरिता वा मूर्तयो यस्याः, तिस्र सन्ध्यास्तदधिष्ठात्र्यो गायत्री समवत्रो सरस्वत्यो मूर्तयो यस्याः जाग्रत्स्वप्र-सुषुप्तिलक्षणा मूर्तयो सरस्वत्याः, त्रयोऽज्ञानलिङ्गस्थूलदेहाः तदभिमानिनः प्राज्ञतैजसविश्वहिरण्यगर्भवैश्वानरा वा मूर्तयो यस्याः ऋग्यजुस्साम लक्षणा वा त्रयी मूर्तिरस्याः, ध्येयध्यानध्यातृरूपा त्रिपुटीमूर्तिः स्वरूपं यस्याः तस्यै इत्थमनेकाकृतये तथापि ब्रह्मस्वरूपायै अप्रच्युतस्वस्वरूपायै नम इति पूर्वेण सम्बन्धः। प्रणवान्तर्गतस्य अकारस्य पराविषयत्वम्, उकारस्य पश्यन्ती विषयत्वं, मकारस्य सन्निपातस्य च मध्यमा विषयत्वं स्वस्वस्थानप्राप्तानां वर्णानां तद्विवर्तानां च वैखरीविषयत्वमिति विवेकः। कार्यकालोपस्थितमायागुणानुकरणेन विविधाकृत्या प्रतीयमानस्यापि ब्रह्मणः कूटस्थस्वस्वरूपत्वात् सच्चिदानन्दरूपत्वं न हीयते इति भावः।।

**అవతారికా:**– పునరపి పరా–పశ్యన్తీ–మధ్యమా–వైఖరీలక్షణశబ్దవృత్త్యా అకారాద్యక్షర–రూపేణ స్వయమేవ వివర్తతామివ ప్రాప్తం బ్రహ్మ ఏవ మఙ్గలాన్తరత్వేన ప్రణమతి।

శ్లో।। వాచే బ్రహ్మస్వరూపాయై పఞ్చాశద్వర్ణభేదతః।
అనేకరూపమాప్తాయై నమో మాత్రే త్రిమూర్తయే।। 2

వాచ ఇతి। మాత్రే సకలచరాచరజగజ్జనన్యై వాచే సరస్వత్యై నమః। కిం భూతాయై? పఞ్చాశద్వర్ణభేదతః లిప్యా, ఆకృత్యా, స్థానేన ఉచ్చారణేన వా భిన్నత్వేన స్వసమానైః అకారాది షోడశ, కకారాది పఞ్చవింశతిః, యకారాది నవ ఇత్యేవం

పఞ్చాశత్ సంఖ్యాకైః వర్ణైః అనేకరూపాం పరా-పశ్యన్తీ-మధ్యమా-వైఖరీ-లక్షణ-శబ్దవృత్త్యా, చరాచరరూపేణ వా వివిధాకృతిమాప్తాయై, అత ఏవ త్రిమూర్తయే త్రయోఽకార-ఉకారమకారాః మూర్తయః యస్యాః, తదధిష్ఠాతారో హరిహర-విధాతారో వా మూర్తయో యస్యాః, సత్త్వరజస్తమోగుణా వా మూర్తయ ఉపాధయో యస్యాస్తస్యై॥

యద్వా తిస్రో భూరాద్యా వ్యాహృతయో వహ్నిసూర్యసోమకలా వా మూర్తయో యస్యాః త్రీణి పదాని యస్యాం గాయత్ర్యాం సా మూర్తిః యస్యాః,త్రయో లోకా సన్తి యస్మిన్ బ్రహ్మాణ్డే తన్మూర్తిః యస్యాః, త్రయో హ్రస్వదీర్ఘప్లుతా ఉదాత్తానుదాత్తస్వరితా వా మూర్తయో యస్యాః, తిస్రః సన్ధ్యాస్తదధిష్ఠాత్ర్యో గాయత్రీస[illegible]త్రో సరస్వత్యో మూర్తయో యస్యాః, జాగ్రత్స్వప్నసుషుప్తిలక్షణా మూర్తయో సరస్వత్యాః, త్రయోఽ-జ్ఞానలిఙ్గస్థూలదేహాః తదభిమానినః ప్రాజ్ఞతైజసవిశ్వహిరణ్యగర్భవైశ్వానరా వా మూర్తయో యస్యాః ఋగ్యజుస్సామలక్షణా వా త్రయీ మూర్తిరస్యాః, ధ్యేయధ్యాన-ధ్యాతృరూపా త్రిపుటీమూర్తిః స్వరూపం యస్యాః తస్యై ఇత్థమనేకాకృతయే తథాపి బ్రహ్మస్వరూపాయై అప్రచ్యుతస్వస్వరూపాయై నమ ఇతి పూర్వేణ సమ్బన్ధః॥ ప్రణవాన్తర్గతస్య అకారస్య పరావిషయత్వమ్, ఉకారస్య పశ్యన్తీ విషయత్వం, మకారస్య సన్నిపాతస్య చ మధ్యమా విషయత్వం స్వస్వస్థానప్రాప్తానాం వర్ణానాం తద్వివర్తానాం చ వైఖరీవిషయత్వమితి వివేకః॥ కార్యకాలోపస్థితమాయాగుణానుకరణేన వివిధాకృత్యా ప్రతీయమానస్యాపి బ్రహ్మణః కూటస్థస్వరూపత్వాత్ సచ్చిదానన్దరూపత్వం న హీయతే ఇతి భావః॥

अवतारिका:- त्रिगुणमायामृगीनर्तकत्वेन गुणाभिमानित्वं गतस्य पूर्वस्वरूप अस्मृत्या आत्मनो जीवत्वव्यवहारो दुर्वार इत्याशयेनाह ।

श्लो॥ त्रैगुण्याद् ब्रह्मणः पूर्वं सच्चिदानन्दरूपिणः।
सदसत्कर्मणोः सङ्गाज्जीवत्वं न निवर्तते ॥ ३

व्याख्या - त्रैगुण्यादिति । सत्ताज्ञानसुखस्वरूपस्यापि परमात्मनः सत्त्वरजस्तमः-साम्यलक्षणायां प्रकृतौ प्रतिबिम्बपातेन जीवत्वं लभमानस्य जगदुपादानकारणा-विद्यासम्बन्धेन अदृष्टवशतः संप्राप्तोत्तममध्यमाधमकर्मप्रसङ्गेन संसरत आत्मनः कर्मकर्तृत्वभोक्तृत्वाभिमानानिवृत्त्या तदाकारवृत्त्यभावात् जीव इति नामरूपव्यवहारो न निवर्तते । अविद्यास्वभावनामरूपयोरेव आत्मस्वभावरूपसच्चिदानन्दावरकत्वात् तत्संसर्ग एवात्मनो द्वैरूप्यकर इति भावः॥

**అవతారికా:-** త్రిగుణమాయామృగీనర్తకత్వేన గుణాభిమానిత్వం గతస్య పూర్వ-స్వరూప- అస్మృత్యా ఆత్మనో జీవత్వవ్యవహారో దుర్వార ఇత్యాశయేనాహ।

శ్లో॥ త్రైగుణ్యాద్ బ్రహ్మణః పూర్వం సచ్చిదానన్దరూపిణః।
సదసత్కర్మణోః సఙ్గాజ్జీవత్వం న నివర్తతే॥ 3

**వ్యాఖ్యా-** త్రైగుణ్యాదితి। సత్తాజ్ఞానసుఖస్వరూపస్యాపి పరమాత్మనః సత్త్వరజస్తమః -సామ్య లక్షణాయాం ప్రకృతౌ ప్రతిబిమ్బపాతేన జీవత్వం లభమానస్య జగదుపాదాన-కారణావిద్యాసమ్బన్ధేన అదృష్టవశతః సంప్రాప్తోత్తమమధ్యమాధమకర్మప్రసఙ్గేన సంసరత ఆత్మనః కర్మకర్తృత్వభోక్తృత్వాభిమానానివృత్త్యా తదాకారవృత్త్యభావాత్ జీవ ఇతి నామరూపవ్యవహారో న నివర్తతే। అవిద్యాస్వభావనామరూపయోరేవ ఆత్మస్వభావరూప సచ్చిదానన్దావరకత్వాత్ తత్సంసర్గ ఏవాత్మనో ద్వైరూప్యకర ఇతి భావః॥

**अवतारिका:-** त्रिगुणसम्बन्धनिबन्धनैव आत्मनस्तत्तद्गुणकर्मानुसारिणी देहलोक प्राप्तिरपि प्रसक्तेत्याह --

श्लो।। अधोवृत्तिस्तमोवृत्तेर्मध्यवृत्तिस्तु राजसात् ।
ऊर्ध्ववृत्तिस्तु सत्त्वेन सत्यवृत्तिर्विशुद्धतः ।। ४

**व्याख्या** - अधोवृत्तिरिति । अज्ञानमोहादिकारेण तमसि वृत्तिः वर्तनं यस्य कर्मणस्तदभिमानिनो जीवात्मनः पशुपक्षिमृगनागाद्यशुभयोनिः यातनार्हलोकप्राप्तिश्च प्रसज्यते इति शेषः। "अधो गच्छन्ति तामसाः" इति भगवद्गीतोक्तेः। रागतृष्णादि-कारणरजः प्रधानात् कर्मणः सकाशात् तदभिमानिनो जीवस्य मध्यवृत्तिः विद्याधरयक्षरक्षोमनुष्यादियोनिः समानसुखदुःखोदयलोकप्राप्तिश्च भवति । "मध्ये तिष्ठन्ति राजसाः" इति गीतोक्तेः। ज्ञानसुखादिकारणसत्त्वप्रधानकर्मणा तदभिमानिदेहिनः ऋषिदेवतादियोनिः स्वर्गमहर्लोकादिप्राप्तिश्च भवति। "ऊर्ध्वं गच्छन्ति सत्वस्था" इति गीतोक्तेः। तत्रापि विशिष्ठतः लुप्तरजस्तमोवृत्तिक-वैराग्योपरतिहेतुकसात्त्विककर्मणः सत्यवृत्तिः सत्ये हिरण्यगर्भलोके सत्यलक्षणे परमात्मनि वा वृत्तिः स्थितिरुपतिष्ठते । गुणानां प्रकृतिकार्यत्वेऽपि कार्याकृती-नामनेकत्वात् फलानामपि अनेकत्वमिति भावः ।।

**అవతారికా:-** త్రిగుణసమ్బన్ధనిబన్ధనైవ ఆత్మనస్తత్తద్గుణకర్మానుసారిణీ దేహలోకప్రాప్తి-రపి ప్రసక్తేత్యాహ --

శ్లో॥ అధోవృత్తిస్తమోవృత్తేర్మధ్యవృత్తిస్తు రాజసాత్।
ఊర్ధ్వవృత్తిస్తు సత్త్వేన సత్యవృత్తిర్విశుద్ధతః॥ 4

వ్యాఖ్యా:- అధోవృత్తిరితి। అజ్ఞానమోహాదికారేణ తమసి వృత్తిః వర్తనం యస్య కర్మణ-స్తదభిమానినో జీవాత్మనః పశుపక్షిమృగనాగాద్యశుభయోనిః యాతనార్హలోకప్రాప్తిశ్చ ప్రసజ్యతే ఇతి శేషః। "అధో గచ్ఛన్తి తామసాః" ఇతి భగవద్గీతోక్తేః। రాగతృష్ణాదికారణ-రజఃప్రధానాత్ కర్మణః సకాశాత్ తదభిమానినో జీవస్య మధ్యవృత్తిః విద్యాధర-యక్షరక్షోమనుష్యాదియోనిః సమానసుఖదుఃఖోదయలోకప్రాప్తిశ్చ భవతి । "మధ్యే తిష్ఠన్తి రాజసాః"ఇతి గీతోక్తేః। జ్ఞానసుఖాదికారణసత్త్వప్రధానకర్మణా తదభిమానిదేహినః ఋషిదేవతాదియోనిః స్వర్గమహర్లోకాది ప్రాప్తిశ్చభవతి। "ఊర్ధ్వం గచ్ఛన్తి సత్త్వస్థాః" ఇతి గీతోక్తేః। తత్రాపి విశిష్టతః లుప్తరజస్తమోవృత్తిక-వైరాగ్యోపరతిహేతుక సాత్త్విక-కర్మణః సత్యవృత్తిః సత్యే హిరణ్యగర్భలోకే సత్యలక్షణే పరమాత్మని వా వృత్తిః స్థితిరుపతిష్ఠతే। గుణానాం ప్రకృతికార్యత్వేఽపి కార్యాకృతీనామనేకత్వాత్ ఫలానామపి అనేకత్వమితి భావః॥

अवतारिका:- गुणानुगतस्वभावभेदमूलककर्मफलानां भेदापत्त्या तत्फलभोगार्थं संसृतस्यात्मनोऽनेकनामरूपभेदयोऽपि प्रसक्त इत्याह --

श्लो॥ कर्मणां फलवैचित्र्याद्वैचित्र्यं जन्मनामिह ।
देहवैचित्र्यतो जीवे वैचित्र्यं भासते तथा ॥ ५

व्याख्या - कर्मणामिति। सत्त्वोद्रेककर्मणां फलं स्वर्गादि । रजः प्रधानकर्मणो भूम्यन्तरिक्षलोकस्थितिः फलम् । तामसकर्मणो यातनार्हस्थानप्राप्तिः फलम् । शुद्धसत्त्वप्रधानकर्मणो हिरण्यगर्भलोकप्राप्तिः फलम् । एतस्मादेव कर्मफल-वैचित्र्याद् जन्मवैचित्र्यम् । स्वर्गान्तरिक्षभूविवराधिकरणकसुखदुःखादिप्राप्त्यर्थं देवादि मनुष्यादि पश्वादि ब्रह्मर्ष्यादि जन्मेति शरीरवैचित्र्यम् । यथा कर्मवैचित्र्यात् फलवैचित्र्यं फलवैचित्र्याद्देहवैचित्र्यं तथा देहवैचित्र्यतो जीववैचित्र्यमपि भासते। तत्त्वात्मनोः साम्येऽपि इन्द्रादयो देवा, वशिष्ठादयो मुनयो, हरिश्चन्द्रादयो राजानः, शेषादयो नागा इत्यादि जीववैचित्र्यं प्रसिद्धम् । वस्तुतो बिम्बप्रतिबिम्ब-योरभेदेनाविकलमेव जीवात्मनो ब्रह्मत्वमिति । असदपि जीववैचित्र्यं पुष्पगन्धवद् अविद्याकार्यदेहाध्यासेन स्वरूपास्फूर्त्या सदिव प्रतीयते इति भावः॥

**అవతారికా:**- గుణానుగతస్వభావభేదమూలకకర్మఫలానాం భేదాపత్త్యా తత్ఫలభోగార్థం సంసృతస్యాత్మనోఽనేకనామరూపభేదయోఽపి ప్రసక్త ఇత్యాహ -

శ్లో॥ కర్మణాం ఫలవైచిత్ర్యాద్వైచిత్ర్యం జన్మనామిహ।
దేహవైచిత్ర్యతో జీవే వైచిత్ర్యం భాసతే తథా ॥ 5

**వ్యాఖ్యా :**- కర్మణామితి। సత్త్వోద్రేకకర్మణాం ఫలం స్వర్గాది। రజఃప్రధానకర్మణో భూమ్యన్తరిక్షలోకస్థితిః ఫలమ్। తామసకర్మణో యాతనార్హస్థానప్రాప్తిః ఫలమ్। శుద్ధ-సత్త్వప్రధానకర్మణో హిరణ్యగర్భలోకప్రాప్తిః ఫలమ్। ఏతస్మాదేవ కర్మఫలవైచిత్ర్యాద్ జన్మవైచిత్ర్యమ్। స్వర్గాన్తరిక్షభూవివరాధికరణకసుఖదుఃఖాదిప్రాప్త్యర్థం దేవాది మనుష్యాది పశ్వాది బ్రహ్మర్ష్యాది జన్మేతి శరీరవైచిత్ర్యమ్। యథా కర్మవైచిత్ర్యాత్ ఫలవైచిత్ర్యం, ఫలవైచిత్ర్యాద్దేహవైచిత్ర్యం తథా దేహవైచిత్ర్యతో జీవవైచిత్ర్యమపి భాసతే। తత్త్వాత్మనోః సామ్యేఽపి ఇన్ద్రాదయో దేవా, వసిష్ఠాదయో మునయో, హరిశ్చన్ద్రాదయో రాజానః, శేషాదయో నాగా ఇత్యాది జీవవైచిత్ర్యం ప్రసిద్ధమ్। వస్తుతో బిమ్బప్రతిబిమ్బ-యోరభేదేనావికలమేవ జీవాత్మనో బ్రహ్మత్వమితి। అసదపి జీవవైచిత్ర్యం పుష్పగన్ధవద్ అవిద్యాకార్యదేహాధ్యాసేన స్వరూపాస్ఫూర్త్యా సదివ ప్రతీయతే ఇతి భావః॥

**अवतारिका:**- ननु कर्मफलभोगान्ते स्वतः प्राप्तस्वरूपसम्पदा जीवत्वनिवृत्तिः भविष्यत्येवेत्याशङ्क्य फलभोगावस्थायामपि पुनः कर्मान्तरप्रसक्त्या न स्वस्वरूप-सम्पदुदय इत्याशयेनाह --

श्लो।। आनन्त्यं कर्मणामित्थमारोहादवरोहतः ।
पुण्यापुण्यविशेषेण नित्या जीवस्य संस्थितिः।। ६

**व्याख्या** - आनन्त्यमिति । शुभाशुभकर्मफलभोगार्थं स्वर्गादौ गमनमारोहणम् । फलभोगानन्तरं पुण्यपापयोः शेषेण पुनः स्वर्गादे च्युतिः अवरोहणम् । एवं क्रमेण कर्मणां चानन्त्यमपरिक्षयः। इह सत्कर्मकृत्या तज्जन्यपुण्यफलभोगार्थं देवादियोनिमाश्रित्य कृतसुकृतभोगस्य किञ्चित्पुण्यशेषेण भूमौ पुनर्जन्मसम्बन्धः तत्र कृतस्य कर्मणः फलभोगाय पुनः स्वर्गादौ गमनम्, एवं शुभकर्मण्योप्यारोहण मवरोहणं च नियतम् । अथासत्कर्म कृत्वापि तज्जन्यपापभोगार्थं यातनार्हासद्यो-निमाश्रित्य कृताशुभफलभोगस्य किञ्चित्पापशेषेण अदृष्टप्रेरितस्य भूमौ पुनरसज्जन्म प्रसङ्गः, तत्र पुनस्तामसकर्मप्रसक्तिः तत्कर्मफलभोगार्थं तदनुसारि

लोकगमनम् इत्यसत् कर्मण आरोहावरोहौ नियतौ । उपसर्गवैशिष्ट्यात् पुण्यपाप शेषमन्तरेण देहान्तरानुत्पत्तिः सूक्ता भवति । इत्येवं प्रकारेण आरोहावरोहाभ्यां जीवस्य संस्थितिः स्वरूपानवमतिर्नित्या, कर्मनिर्हारमन्तरेण दृढमूला । वस्तुतो ऽनुपहतापि सच्चिदानन्दसम्पत्तिः विस्मृतकण्ठमणेर्मणिरिव देहाध्यासवशतः अस्मृता सती जीवात्मनः शोकमोहादिजनिकेव अभूदिति भावः॥

అవతారికా:- నను కర్మఫలభోగాన్తే స్వతః ప్రాప్తస్వరూపసమ్పదా జీవత్వనివృత్తిః భవిష్యత్యేవేత్యాశఙ్క్య ఫలభోగావస్థాయామపి పునః కర్మాన్తరప్రసక్త్యా న స్వస్వరూప సమ్పదుదయ ఇత్యాశయేనాహ-

శ్లో॥ అనన్త్యం కర్మణామిత్థమారోహాదవరోహతః
పుణ్యాపుణ్యవిశేషేణ నిత్యా జీవస్య సంస్థితిః॥ 6

వ్యాఖ్యా :- అనన్త్యమితి। శుభాశుభకర్మఫలభోగార్థం స్వర్గాదౌ గమనమారోహణమ్। ఫలభోగానన్తరం పుణ్యపాపయోః శేషేణ పునః స్వర్గాదే చ్యుతిః అవరోహణమ్। ఏవం క్రమేణ కర్మణాం చానన్త్యమపరిక్షయః ఇహ సత్కర్మకృత్వా తజ్జన్యపుణ్యఫలభోగార్థం దేవాదియోనిమాశ్రిత్య కృతసుకృతభోగస్య కిఞ్చిత్పుణ్యశేషేణ భూమౌ పునర్జన్మ సమ్బన్ధః తత్ర కృతస్య కర్మణః ఫలభోగాయ పునః స్వర్గాదౌ గమనమ్, ఏవం శుభకర్మణోప్యా-రోహణమవరోహణం చ నియతమ్। అథాసత్కర్మ కృత్వాపి తజ్జన్యపాపభోగార్థం యాతనార్థాసద్యోనిమాశ్రిత్య కృతాశుభఫలభోగస్య కిఞ్చిత్పాపశేషేణ అదృష్టప్రేరితస్య భూమౌ పునరసజ్జన్మ ప్రసఙ్గః, తత్ర పునస్తామసకర్మప్రసక్తిః తత్కర్మఫలభోగార్థం తదనుసారిలోకగమనమ్ ఇత్యసత్కర్మణ ఆరోహావరోహౌ నియతౌ। ఉపసర్గవైశిష్ట్యాత్ పుణ్యపాపశేషమన్తరేణ దేహాన్తరానుత్పత్తిః సూక్తా భవతి। ఇత్యేవం ప్రకారేణ ఆరోహావరోహాభ్యాం జీవస్య సంస్థితిః స్వరూపానవమతిర్నిత్యా, కర్మనిర్హారమన్తరేణ దృఢమూలా। వస్తుతోఽనుపహతాపి సచ్చిదానన్దసమ్పత్తిః విస్మృతకణ్ఠమణేర్మణిరివ దేహాధ్యాసవశతః అస్మృతా సతీ జీవాత్మనః శోకమోహాదిజనికేవ అభూదితి భావః॥

अवतारिका:- ननु आरोहावरोहयोः फलभोगमूलत्वात् फलानां चाविद्यामूल-त्वात्तस्याश्च बाधदर्शनात् कथमपि तदुपेक्षया स्वरूपस्मृतिः भवेदेव इत्याशङ्क्य अविद्यायाः सादित्वे सर्वमेतत् सम्पद्यते, न तु तदस्तीत्याह --

श्लो॥ अविद्याया अनादित्वात् कर्मणामपरिक्षयात् ।
कृतनाशाद्विधा गत्या स्वरूपाप्तिर्विदूरतः ॥ ७

व्याख्या - अविद्याया इति । त्रिगुणसाम्यलक्षणायाः सूक्ष्मस्थूलदेहरूपेण परिणताया अज्ञानाभिन्नया अविद्यया अनादित्वात् तन्मूलानाम् एकादशेन्द्रिय-करणकानां कर्मणां चापरिक्षयात् समाप्त्यभावात् कृतस्य च कर्मणो भोगमन्तरेण नाशाभावात् आरोहावरोहयात्रायाश्च भोगार्थत्वात् तत्तद्देहकृतकर्मफलभोगवासनानुपक्षया जीवात्मनः स्वरूपाप्तिः सच्चिदानन्दब्रह्मत्वलब्धिः विदूरतः विशेषेण पारोक्ष्यं गता । घनच्छन्नदृष्टेः सूर्यादर्शनमिव कर्मफलभोगप्रवाहपातेन स्वरूपादृष्ट्या आत्मनोऽहं सुखी अहं दुःखीति स्वारोपितान्तःकरणप्रत्ययो नियत इति भावः॥

అవతారికా:-నను ఆరోహావరోహయోః ఫలభోగమూలత్వాత్ ఫలానాం చావిద్యామూల -త్వాత్తస్యాశ్చ బాధదర్శనాత్ కథమపి తదుపేక్షయా స్వరూపస్మృతిః భవేదేవ ఇత్యాశఙ్క్య, అవిద్యాయాః సాదిత్వే సర్వమేతత్ సమ్పద్యతే, న తు తదస్తీత్యాహ-

శ్లో॥ అవిద్యాయా అనాదిత్వాత్ కర్మణామపరిక్షయాత్।
కృతనాశాద్విధా గత్యా స్వరూపాప్తిర్విదూరతః॥ 7

వ్యాఖ్యా :- అవిద్యాయా ఇతి । త్రిగుణసామ్యలక్షణాయాః సూక్ష్మస్థూలదేహరూపేణ పరిణతాయా అజ్ఞానాభిన్నయా అవిద్యయా అనాదిత్వాత్ తన్మూలానామ్ ఏకాదశేన్ద్రియ కరణకానాం కర్మణాం చాపరిక్షయాత్ సమాప్త్యభావాత్ కృతస్య చ కర్మణో భోగమన్తరేణ నాశాభావాత్ ఆరోహావరోహయాత్రాయాశ్చ భోగార్థత్వాత్ తత్తద్దేహకృతకర్మఫల-భోగవాసనానుపక్షయా జీవాత్మనః స్వరూపాప్తిః సచ్చిదానన్దబ్రహ్మత్వలబ్ధిః విదూరతః విశేషేణ పారోక్ష్యం గతా। ఘనచ్ఛన్నదృష్టేః సూర్యాదర్శనమివ కర్మఫలభోగప్రవాహ-పాతేన స్వరూపాదృష్ట్యా ఆత్మనోఽహం సుఖీ అహం దుఃఖీతి స్వారోపితాన్తఃకరణ-ప్రత్యయో నియత ఇతి భావః॥

अवतारिका:- ननु तस्या अनादित्वेऽपि कर्मणां तु तत्कार्यत्वादुपक्षयप्रसक्तिः अस्त्येवेत्याशङ्क्य कर्मणामप्यनन्तपारत्वात् क्रमेण भोगप्रदत्वाच्च न समाप्ति-रस्तीत्याह -

श्लो॥ सञ्चितं चीयमानं च प्रारब्धं कर्म तत्फलम् ।
क्रमेणावृत्तिरेतेषां पूर्वं बलवतोऽपि वा ॥ ८

व्याख्या - सञ्चितमिति । कृतं, क्रियमाणं, प्रारब्धं चेति त्रिविधं कर्म । तज्जन्यफलं पुण्यं पापं च त्रिविधमेव । तत्राभुक्तं यत्कर्म तत् सञ्चितमित्युच्यते। क्रियमाणं यत्कर्म तत्सञ्चीयमानं, यत्कर्मफलभोगार्थमेतद्देहोत्पत्तिस्तत्कर्म प्रारब्धिमिति व्यवह्रियते। एकस्यैव कालस्य भूतभवद्भविष्यद्व्यवहारविषयमिव कर्मत्वेनैकरूपत्व-स्यापि कर्मणो भोगकालावस्थाभेदेन त्रैविध्यमित्यर्थः।।

तत्र त्रिविधेषु कर्मसु मध्ये जन्मना जन्मभ्यां जन्मभिर्वा प्रारब्धभोगसमाप्तौ सञ्चितकर्मफलभोगारम्भः तत्समाप्तौ च पूर्वे प्रारब्धफलभोगावस्थायां यत् सञ्चीयमानमिति व्यवहृतं तत्फलस्य भोगारम्भः। यद्वा सञ्चितानां शुभाशुभकर्मणां मध्ये यस्य पूर्वकालिकत्वं तस्य पूर्वं प्रारम्भः, तत्समाप्तौ तदनन्तरजातस्यैवं वा क्रमेणावृत्तिः। अपि च सञ्चितकर्मणां मध्ये पौर्वापर्यमनपेक्ष्य यस्य कर्मणो बलवत्तरत्वं तस्यैव पूर्वमारम्भः। अथवा पीयूषग्राहिन्यायेन एककालावच्छेदेन प्रवृत्तानां प्रारब्धानामेव कर्मणां मध्ये प्रारब्धमपि दुर्बलं कर्म तिरस्कृत्य बलवत्तरस्यैव पूर्वमारम्भः।।

केचित्तु बलवत्तरं सञ्चितं पश्चात्-कृत्य अबलस्य सञ्चितस्य अनारब्धत्वात् सञ्चितानामेव पौर्वापर्यव्यतिक्रमो न प्रारब्धानाम् इत्याहुः। सावकाशनिरवकाश-निर्णय-असम्पत्त्या, असति प्रतिबन्धे सर्वेषामेव भोग्यत्वादघटितघटनैकसम्पत्ते-रविद्ययाः कर्मसन्ततेस्तारतम्याग्रहो न वैचित्र्यहेतुरिति भावः।।

అవతారికా:- నను తస్యా అనాదిత్వేఽపి కర్మణాం తు తత్కార్యత్వాదుపక్షయప్రసక్తిః అస్త్యేవేత్యాశఙ్క్య కర్మణామప్యనన్తపారత్వాత్ క్రమేణ భోగప్రదత్వా చ్చ న సమాప్తిరస్తీత్యాహ-

శ్లో॥ సఞ్చితం చీయమానం చ ప్రారబ్ధం కర్మ తత్ఫలమ్।
క్రమేణావృత్తిరేతేషాం పూర్వం బలవతోఽపి వా ॥ 8

వ్యాఖ్యా:- సఞ్చితమితి। కృతం, క్రియమాణం, ప్రారబ్ధం చేతి త్రివిధం కర్మ! తజ్జన్య-ఫలం పుణ్యం పాపం చ త్రివిధమేవ। తత్రాభుక్తం యత్కర్మ తత్ సఞ్చితమిత్యుచ్యతే। క్రియమాణం యత్కర్మ తత్సఞ్చీయమానం, యత్కర్మఫలభోగార్థమేతద్దేహోత్పత్తిస్తత్కర్మ ప్రారబ్ధమితి వ్యవహ్రియతే। ఏకస్యైవ కాలస్య భూతభవద్భవిష్యద్వ్యవహారవిషయమివ కర్మత్వేనైకరూపత్వస్యాపి కర్మణో భోగకాలావస్థాభేదేన త్రైవిధ్యమిత్యర్థః॥

తత్ర త్రివిధేషు కర్మసు మధ్యే జన్మనా జన్మభ్యాం జన్మభిర్వా ప్రారబ్ధభోగసమాప్తౌ సఞ్చితకర్మఫలభోగారమ్భః తత్సమాప్తౌ చ పూర్వే ప్రారబ్ధఫలభోగావస్థాయాం యత్ సఞ్చీయమానమితి వ్యవహృతం తత్ఫలస్య భోగారమ్భః। యద్వా సఞ్చితానాం శుభాశుభకర్మణాం మధ్యే యస్య పూర్వకాలికత్వం తస్య పూర్వం ప్రారమ్భః, తత్సమాప్తౌ తదనన్తరజాతస్యైవం వా క్రమేణావృత్తిః। అపి చ సఞ్చితకర్మణాం మధ్యే పౌర్వాపర్యమ-నపేక్ష్య యస్య కర్మణో బలవత్తరత్వం తస్యైవ పూర్వమారమ్భః। అథవా పీయూష-గ్రాహిన్యాయేన ఏకకాలావచ్ఛేదేన ప్రవృత్తానాం ప్రారబ్ధానామేవ కర్మణాం మధ్యే ప్రారబ్ధమపి దుర్బలం కర్మ తిరస్కృత్య బలవత్తరస్యైవ పూర్వమారమ్భః॥

కేచిత్తు బలవత్తరం సఞ్చితం పశ్చాత్-కృత్య అబలస్య సఞ్చితస్య అనారబ్ధత్వాత్ సఞ్చితానామేవ పౌర్వాపర్యవ్యతిక్రమో న ప్రారబ్ధానామ్ ఇత్యాహుః।సావకాశనిరవకాశ -నిర్ణయ-అసమ్భవాత్, అసతి ప్రతిబన్ధే సర్వేషామేవ భోగ్యత్వాదఘటితఘటనైక సమ్భూతేరవిద్యాయాః కర్మసన్తతేస్తారతమ్యాగ్రహో న వైచిత్ర్యహేతురితి భావః॥

अवतारिका:- ननु "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" इति भगवद्वचनाद् ज्ञानेन कर्मसमाप्तेरुक्तत्वात् कथं कर्मसमाप्तिर्न इत्याशङ्क्य केषाञ्चिज् ज्ञाननाश्यत्वेऽपि केषाञ्चित्तु भोगनाश्यत्वस्यैव श्रुत्युक्तं न ज्ञानेन कृत्स्नकर्मसमाप्ति-रित्याह --

श्लो॥ उभयोर्ज्ञानतो नाशो भोगात् प्रारब्धकर्मणः ।
क्षेत्रागारोदरस्थानामन्नानामिव तद्विदा ॥ ९

व्याख्या - उभयोरिति । परोक्षापरोक्षभेदेन ज्ञानं द्विविधम् । तत्र "ब्रह्म अस्ति, मदुपास्यं ब्रह्म" इति यद् ज्ञानं तत्परोक्षम् । "ब्रह्म सत्यं, जगन्मिथ्या, ब्रह्मैवाखिलं जगत्, घटाकाशमहाकाशयोरिव, नभस्थ-जलस्थचन्द्रयोरिव जीवात्म-परमात्मनोर्नास्ति भेदः, अतोऽहमस्मि ब्रह्मैव" इत्याकारकं ज्ञानमपरोक्षम् । तयोर्मध्ये परोक्षज्ञानं जनकं, अपरोक्षज्ञानं तावत् प्रारब्धेतरकर्मनाशकं, एवं चान्यं ज्ञानमपरोक्षमेव गृह्यते । तस्मादुभयोः सञ्चितसञ्चीयमानयोर्नाशः बीजलोपः। प्रारब्धकर्मणस्तु भोगेनैव शान्तिर्नान्यथा ॥

तत्र निदर्शनं यथा - क्षेत्रस्थितमन्नं सञ्चीयमानं, गहस्थितमन्नं सञ्चितं, उदरस्थितमन्नं प्रारब्धम् तत्र क्षेत्रागारस्थितयोरन्नयोः दानादिना तात्कालिकक्षयो-

ऽपि सम्भवति, उदरस्थान्नस्य तु भोगात् कालपरिपाकादेव क्षयः। इत्थं यथान्नस्य भिदा तथा कर्मभेदोऽपि । सञ्चितसञ्चीयमानयोरेव कर्मणोर् ज्ञाननाश्यत्वं नारब्धस्य । तथा च ''नाभुक्तं क्षीयते कर्म'' इत्यादौ कर्मशब्दस्य प्रारब्धपरत्वं, 'ज्ञानाग्निः सर्वकर्माणी' त्यादौ सर्वशब्दः सञ्चितसञ्चीयमानपर इति मन्तव्यम्। अविशेषण कर्मभोगनाशयोरुक्तत्वेऽपि श्रुतिस्मृतिवचोबलादेव आचार्यैर्व्यवस्थाया उक्तत्वात् सम्प्रत्ययाच्चाप्रामाण्यं नाशङ्कनीयं इति भावः ॥

**అవతారికా:**-నను "జ్ఞానాగ్నిః సర్వకర్మాణి భస్మసాత్ కురుతే తథా" ఇతి భగవద్వచనాద్ జ్ఞానేన కర్మసమాప్తేరుక్తత్వాత్ కథం కర్మసమాప్తిర్న ఇత్యాశఙ్క్య కేషాఞ్చిజ్ జ్ఞాననాశ్యత్వే-ఽపి కేషాఞ్చిత్తు భోగనాశ్యత్వస్యైవ శ్రుత్యుక్తం న జ్ఞానేన కృత్స్నకర్మసమాప్తిరిత్యాహ-

**శ్లో॥ ఉభయోర్జ్ఞానతో నాశో భోగాత్ ప్రారబ్ధకర్మణః**
**క్షేత్రాగారోదరస్థానామన్నానామివ తద్భిదా ॥ 9**

**వ్యాఖ్యా:**- ఉభయోరితి। పరోక్షాపరోక్షభేదేన జ్ఞానం ద్వివిధమ్। తత్ర "బ్రహ్మ అస్తి, మదుపాస్యం బ్రహ్మ" ఇతి యద్ జ్ఞానం తత్పరోక్షమ్। "బ్రహ్మ సత్యం, జగన్మిథ్యా, బ్రహ్మైవాఖిలం జగత్, ఘటాకాశమహాకాశయోరివ, నభస్థ-జలస్థచన్ద్రయోరివ జీవాత్మ-పరమాత్మనోర్నాస్తి భేదః, అతోఽహమస్మి బ్రహ్మైవ" ఇత్యాకారకం జ్ఞానమపరోక్షమ్। తయోర్మధ్యే పరోక్షజ్ఞానం జనకం, అపరోక్షజ్ఞానం తావత్ ప్రారబ్ధేతరకర్మనాశకం, ఏవం చాన్యం జ్ఞానమపరోక్షమేవ గృహ్యతే। తస్మాదుభయోః సఞ్చితసఞ్చీయమానయో-ర్నాశః బీజలోపః। ప్రారబ్ధకర్మణస్తు భోగేనైవ శాన్తిర్నాన్యథా॥

తత్ర నిదర్శనం యథా – క్షేత్రస్థితమన్నం సఞ్చీయమానం, గహస్థితమన్నం సఞ్చితం, ఉదరస్థితమన్నం ప్రారబ్ధమ్। తత్ర క్షేత్రాగారస్థితయోరన్నయోః దానాదినా తాత్కాలికక్షయోఽపి సమ్భవతి, ఉదరస్థాన్నస్య తు భోగాత్ కాలపరిపాకాదేవ క్షయః। ఇత్థం యథాన్నస్య భిదా తథా కర్మభేదోఽపి । సఞ్చితసఞ్చీయమానయోరేవ కర్మణోర్ జ్ఞాననాశ్యత్వం నారబ్ధస్య।తథా చ "నాభుక్తం క్షీయతే కర్మ" ఇత్యాదౌ కర్మ-శబ్దస్య ప్రారబ్ధపరత్వం,'జ్ఞానాగ్నిః సర్వకర్మాణీ' త్యాదౌ సర్వశబ్దః సఞ్చితసఞ్చీయమాన-పర ఇతి మన్తవ్యమ్। అవిశేషణ కర్మభోగనాశయోరుక్తత్వేఽపి శ్రుతిస్మృతివచోబలాదేవ ఆచార్యైర్వ్యవస్థాయా ఉక్తత్వాత్ సంప్రత్యయాచ్చాప్రామాణ్యం నాశఙ్కనీయం ఇతి భావః॥

अवतारिका:- ननु नाकृतमिति न्यायेन, अकृते कर्मणि फलानुदयतो भोग्याभावादिष्टप्राप्तिर्भवत्येव इत्याशङ्क्य पूर्वजन्मकृतकर्मफलभोगस्य अवश्यं भावित्वात् कर्माकरणसम्भवतोऽपि सञ्चीयमानस्योदयस्य दुर्वारत्वाद् भोग्याभावोऽसिद्ध इत्याशयेनाह –

श्लो॥ पूर्वं फलति देहेऽस्मिन् कृतमत्र परत्र यत् ।
अदृष्टत्वाद् द्वयोरेव उत्कटमत्रैव जन्मनि ॥ १०

व्याख्या - पूर्वमिति । पूर्वं पूर्वजन्मनि कृतं कर्म अस्मिन् देहे फलति एतज्जन्मभोग्यं भवति । अत्र जन्मनि कृतं यत्कर्म तत् परत्र जन्मान्तरे फलति । पूर्वजन्मकृतकर्मण एतज्जन्मकृतकर्मसंस्कारस्य चादृष्टत्वात् अदृष्टशब्दवाच्यत्वात् श्रुतिस्मृतिभ्यामियं व्यवस्थेत्यर्थः। उत्कटं तु कर्म शुभमशुभमप्येतज्जन्मकृतं एतस्मिन्नेव जन्मनि प्रारब्धमाक्रम्य फलति । समाप्तिरपि उत्कटानुत्कट भोगावरोधेन अत्र जन्मान्तरे वा फलति । उपस्थितेरस्यादृष्टत्वात् निरुक्तेरनवसरात् इति भावः॥

అవతారికా:- నను నాకృతమితి న్యాయేన,అకృతే కర్మణి ఫలానుదయతో భోగ్యాభావాదిష్టప్రాప్తిర్భవత్యేవ ఇత్యాశజ్క్య పూర్వజన్మకృతకర్మఫలభోగస్య అవశ్యం-భావిత్వాత్ కర్మాకరణసంభవతోఽపి సఞ్చీయమానస్యోదయస్య దుర్వారత్వాద్ భోగ్యాభావోఽసిద్ధ ఇత్యాశయేనాహ -

శ్లో॥ పూర్వం ఫలతి దేహేఽస్మిన్ కృతమత్ర పరత్ర యత్।
అదృష్టత్వాద్ ద్వయోరేవ ఉత్కటమత్రైవ జన్మని॥ 10

వ్యాఖ్యా - పూర్వమితి। పూర్వం పూర్వజన్మని కృతం కర్మ అస్మిన్ దేహే ఫలతి ఏతజ్జన్మ-భోగ్యం భవతి। అత్ర జన్మని కృతం యత్కర్మ తత్ పరత్ర జన్మాన్తరే ఫలతి। పూర్వజన్మ-కృతకర్మణ ఏతజ్జన్మకృతకర్మసంస్కారస్య చాదృష్టత్వాత్ అదృష్టశబ్దవాచ్యత్వాత్ శ్రుతి-స్మృతిభ్యామియం వ్యవస్థేత్యర్థః। ఉత్కటం తు కర్మ శుభమశుభమప్యేతజ్జన్మకృతం ఏతస్మిన్నేవ జన్మని ప్రారబ్ధమాక్రమ్య ఫలతి। సమాప్తిరపి ఉత్కటానుత్కటభోగావరోధేన అత్ర జన్మాన్తరే వా ఫలతి। ఉపస్థితేరస్యాదృష్టత్వాత్ నిరుక్తేరనవసరాత్ ఇతి భావః॥

अवतारिका:- ननु जन्मोपलक्षितकर्मसमाप्तौ कर्मोपलक्ष्यजन्मसमाप्तौ वा भवेद् इष्टप्राप्तिरित्याशङ्क्य जन्मकर्मणोर्जन्यजनकत्वनिर्धारणे विनिगमनाविरहादेकतरनाशोऽपि निर्णेतुमशक्य इत्याशयेनाह -

श्लो॥ जन्ममूलं च कर्मैव निष्पत्तिः कर्मणां जनेः।
नाशोऽन्योन्याश्रयान्नास्ति बीजाङ्कुरवदेतयोः॥ ११

व्याख्या - जन्ममूलमिति । कृतकर्मफलभोगार्थमेव जन्मसम्पद्यते । अन्यथा अकृताभ्यागमप्रसङ्गात् । जन्ममूलं जन्मनि निमित्तं कर्मैव भवति । "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति भगवद्वचनाज्जन्मनि सति पुनः कर्मान्तरोत्पत्तेः कर्मणां निष्पत्तिरुत्पत्तिः जनेर्जन्मत एव । एवं च जन्मकर्मणोः परस्परकारणत्वान्नाशो बीजलोपो नास्त्येव । यथा बीजादङ्कुरोत्पत्तिस्ततः पल्लवशाखापत्रपुष्पफलावयवकवृक्षोत्पत्तिः तत्र बीजाङ्कुरयोः अन्योन्याश्रयः कैश्चिदपि दुष्परिहारः, एवं च बीजाङ्कुरयोः यथा कार्यकारणत्वनियमो नास्ति तथा दुष्परिहारः, एवं च बीजाङ्कुरयोः यथा कार्यकारणत्वनियमो नास्ति तथा जन्मकर्मणोरपि एकतरस्य कारणता अन्यस्य कार्यता इति नियमो नास्ति । इति कारणनाशात् कारणनाशः कार्यनाशात् कार्यनाशः इति नियामकानुशासनाभावादिति भावः॥

అవతారికా:- నను జన్మోపలక్షితకర్మసమాప్తౌ కర్మోపలక్ష్యజన్మసమాప్తౌ వా భవేద్ ఇష్టప్రాప్తిరిత్యాశఙ్క్య జన్మకర్మణోర్జన్యజనకత్వనిర్ధారణే వినిగమనావిరహాదేకతరనాశో- ఽపి నిర్ణేతుమశక్య ఇత్యాశయేనాహ-

శ్లో॥ జన్మమూలం చ కర్మైవ నిష్పత్తిః కర్మణాం జనేః
నాశోఽన్యోన్యాశ్రయాన్నాస్తి బీజాఙ్కురవదేతయోః॥ 11

వ్యాఖ్యా:- జన్మమూలమితి। కృతకర్మఫలభోగార్థమేవ జన్మసమ్పద్యతే। అన్యథా అకృతాభ్యాగమప్రసఙ్గాత్। జన్మమూలం జన్మని నిమిత్తం కర్మైవ భవతి।"న హి కశ్చిత్ క్షణమపి జాతు తిష్ఠత్యకర్మకృత్" ఇతి భగవద్వచనాజ్జన్మని సతి పునః కర్మాన్తరోత్పత్తేః కర్మణాంనిష్పత్తిరుత్పత్తిః జనేర్జన్మత ఏవ। ఏవం చ జన్మకర్మణోః పరస్పరకారణత్వాన్నాశో బీజలోపో నాస్త్యేవ। యథా బీజాదఙ్కురోత్పత్తి స్తతః పల్లవశాఖాపత్రపుష్పఫలావయవక- వృక్షోత్పత్తిః తత్ర బీజాఙ్కురయోః అన్యోన్యాశ్రయః కైశ్చిదపి దుష్పరిహారః, ఏవం చ బీజాఙ్కురయోః యథా కార్యకారణత్వనియమో నాస్తి తథా జన్మకర్మణోరపి ఏకతరస్య కారణతా అన్యస్య కార్యతా ఇతి నియమో నాస్తి। ఇతి కారణనాశాత్ కారణనాశః కార్యనాశాత్ కార్యనాశః ఇతి నియామకానుశాసనాభావాదితి భావః॥

अवतारिका:- जन्मकर्मगतेः कारणतापरिभ्रमणेनाक्षयत्वं विवृणोति –

श्लो॥ वासना सूक्ष्ममूलं स्यात् स्तूलोत्पत्तिस्तु सूक्ष्मतः।
स्थूलतो वासनोत्पत्तिरित्थं जन्म पुनः पुनः॥ १२

व्याख्या - वासनेति । सूक्ष्ममूलं लिङ्गदेहकारणं वासनैव स्यात् । वासना नाम अहमेवं स्याम्, ममैवं स्यादित्यादि विषयासक्तिरूपा अन्तःकरणवृत्तिः। लिङ्गशरीरं च पञ्चज्ञानेन्द्रिय-पञ्चकर्मेन्द्रिय-पञ्चवायु-मनो-बुद्धिरूपः सप्तदशावयवकमदृष्ट-स्थानम् । यद्यपि वासनाधिकरणं लिङ्गशरीरमेव तथापि स्थूलदेहं विना नाविर्भवो विषयासक्तेरित्यभिप्रायेण स्थूलत्वे वासनोत्पत्तिरित्युक्तम् । यस्मिन् विषये यदा वासनोत्पद्यते तदा तद्विषयजप्राप्तिहेतुकं कर्माचरणम् । ततोऽदृष्टोत्पत्तिः। तच्चादृष्टं स्थूलदेहावसाने लिङ्गदेहान्तर्गतं सत् स्थूलदेहान्तरे भोगपदं भवति। इत्थं पुनः पुनः जन्मप्रसङ्गः। जन्मकर्मलिङ्गस्थूलदेहवासनानामाश्रयाश्रयिभावेन जन्ममरणलक्षणसंसारस्य दुस्तरत्वमुक्तम् । विषयार्थवासनया भवाटवीं प्रस्थितस्य जीववणिजः अनेकसुखदुःखनिदानकर्मसहायस्य न पुनरसाधारणकारण मन्तरेण स्वालयप्राप्तिरिति भावः॥

అవతారికా:- జన్మకర్మగతేః కారణతాపరిభ్రమణేనాక్షయత్వం వివృణోతి -

శ్లో॥ వాసనా సూక్ష్మమూలం స్యాత్ స్థూలోత్పత్తిస్తు సూక్ష్మతః।
స్థూలతో వాసనోత్పత్తిరిత్థం జన్మ పునః పునః॥ 12

వ్యాఖ్యా:- వాసనేతి। సూక్ష్మమూలం లిఙ్గదేహకారణం వాసనైవ స్యాత్। వాసనా నామ అహమేవం స్యామ్, మమైవం స్యాదిత్యాది విషయాసక్తిరూపా అన్తఃకరణవృత్తిః। లిఙ్గ- శరీరం చ పఞ్చజ్ఞానేన్ద్రియ-పఞ్చకర్మేన్ద్రియ-పఞ్చవాయు-మనో-బుద్ధిరూపః సప్త- దశావయవకమదృష్టస్థానమ్। సూక్ష్మతో లిఙ్గదేహాత్ స్థూలదేహోత్పత్తిః। స్థూలాత్ పునర్వాసనాయాః సమ్భవః। యద్యపి వాసనాధికరణం లిఙ్గశరీరమేవ తథాపి స్థూలదేహం వినా నావిర్భవో విషయాసక్తేరిత్యభిప్రాయేణ స్థూలత్వే వాసనోత్పత్తి-రిత్యుక్తమ్। యస్మిన్ విషయే యదా వాసనోత్పద్యతే తదా తద్విషయజప్రాప్తిహేతుకం కర్మాచరణమ్। తతోఽదృష్టోత్పత్తిః। తచ్చాదృష్టం స్థూలదేహావసానే లిఙ్గదేహాన్తర్గతం సత్ స్థూలదేహాన్తరే భోగపదం భవతి। ఇత్థం పునః పునః జన్మప్రసఙ్గః। జన్మకర్మ-లిఙ్గస్థూలదేహవాసనానామాశ్రయాశ్రయి భావేన జన్మమరణలక్షణసంసారస్య

దుస్తరత్వ- ముక్తమ్। విషయార్థవాసనయా భవాటవీం ప్రస్థితస్య జీవవణిజః అనేకసుఖ దుఃఖనిదానకర్మసహాయస్య న పునరసాధారణకారణ మన్తరేణ స్వాలయప్రాప్తిరితి భావః॥

अवतारिका :- अखिलस्यापि जन्मकर्मप्रवाहस्य वासनामूलत्वात् तन्नाशादिष्टप्राप्तिः इति वासिष्ठीं सम्मतिं पुरस्कृत्य श्रीभगवत्पूज्यपादसम्मतिदृढीकरणाय अन्येषामपि पक्षपातसम्मतीराह —

श्लो॥ वासनानाशतो जन्मकर्मनाशं मनीषिणः।
वासनायाः क्षयं कर्मनाशादिति परे जगुः॥ १३

व्याख्या- वासनानाशत इति श्लोकचतुष्टयेन। मनीषिणो वशिष्ठादयो विषयासक्त-चित्तस्य मरणानन्तरं यस्मिन् विषये विशेषतोऽध्यासः तद् विषयभोगाय मायाकल्पितं कर्मानुसारि स्थूलदेहमाश्रित्य फलमनुभवतीति हेतोर्वासनाक्षय-मन्तरेण जन्मकर्मणोः समाप्तिः नास्तीति विषयासक्तिरेव पूर्वं त्याज्या, तन्नाशज्जन्मकर्मनाश इत्याहुः। परे आचार्या यावत्कर्म प्रचारस्तावत् पुण्य पापाङ्कुरोत्पत्तिः, यावत्पुण्यपापे तावज्जन्मना भाव्यं अतः कर्मक्षयं विना वासनाक्षयोनास्तीति कर्मसमाप्तिरेव पूर्वं विधेया इति जगुः॥

అవతారికా:- అఖిలస్యాపి జన్మకర్మప్రవాహస్య వాసనామూలత్వాత్ తన్నాశాదిష్టప్రాప్తిః ఇతి వాసిష్ఠీం సమ్మతిం పురస్కృత్య శ్రీభగవత్పూజ్యపాదసమ్మతిదృఢీకరణాయ అన్యేషా-మపి పక్షపాతసమ్మతీరాహ-

శ్లో॥ వాసనానాశతో జన్మకర్మనాశం మనీషిణః
వాసనాయాః క్షయం కర్మనాశాదితి పరే జగుః॥ 13

వ్యాఖ్యా:- వాసనానాశత ఇతి శ్లోకచతుష్టయేన। మనీషిణో వసిష్ఠాదయో విషయాసక్త-చిత్తస్య మరణానన్తరం యస్మిన్ విషయే విశేషతోఽధ్యాసః తద్ విషయభోగాయ మాయాకల్పితం కర్మానుసారి స్థూలదేహమాశ్రిత్య ఫలమనుభవతీతి హేతోర్వాస-నాక్షయమన్తరేణ జన్మకర్మణోః సమాప్తిః నాస్తీతి విషయాసక్తిరేవ పూర్వం త్యాజ్యా, తన్నాశజ్జన్మకర్మనాశ ఇత్యాహుః పరే ఆచార్యా యావత్కర్మప్రచారస్తావత్ పుణ్యపాపాఙ్కు-రోత్పత్తిః, యావత్పుణ్యపాపే తావజ్జన్మనా భావ్యమ్ అతః కర్మక్షయం వినా వాసనాక్షయో నాస్తీతి కర్మసమాప్తిరేవ పూర్వం విధేయా ఇతి జగుః॥

श्लो।। कर्मणो वासनायाश्च नाशो जन्मविनाशतः।
द्वयोर्नाशाज्जन्मनाश इति सम्पन्नवादिनः।। १४

श्लो।। विज्ञानात् कर्मणो नाशो विज्ञानाद्वासनाक्षयः।
विज्ञानाज्जन्मनाशोऽपि विज्ञानात् स्फूर्तिरात्मनः।। १५

व्याख्या - यावज्जन्म तावद्विषयासक्तिः, यावद्विषयानुरागस्तावत् कर्मप्रवृत्तिः तस्माद् यथा जन्म न स्यात्तथा प्रयतेत इति भास्करादयो वदन्ति। सम्पन्नवादिनो महाराजादयस्तु कर्मक्षयमन्तरेण वासनासमाप्तेरसम्भवाद्वासनासमाप्त्यन्तरं च जन्मकारिकारणान्तराभावात् जन्मसमाप्तिस्तावत् कर्मसमाप्त्यधीना इत्याहुः। याज्ञवल्क्यादयस्तु जन्मनाशस्य वासनानाशाधीनत्वात् तन्नाशस्य च कर्मनाशाधीनत्वात् स्वत एव कर्मनाशस्यासम्भवात् कर्म समाप्तिं प्रति विज्ञानस्य कारणतामाश्रित्य मतान्तरमुपेक्षन्ते विज्ञानादिति । सदाकाराकारितवृत्तेरेवात्र विज्ञानशब्दस्य वाच्यत्वात् तादृशवृत्तिमन्तरा कर्मक्षयासम्भवः। तस्मात् कर्मवासनयोः समाप्तिं प्रति विज्ञानस्य साक्षात् कारणता, जन्मसमाप्तिं प्रति परम्परया कारणता। आत्मनः स्फूर्तिः आत्मबोधश्च विज्ञानस्यैव फलं,तस्यैव कृतिसाध्यत्वावगमाद् इत्याहुः ।।

శ్లో॥ కర్మణో వాసనాయాశ్చ నాశో జన్మవినాశతః।
ద్వయోర్నాశాజ్జన్మనాశ ఇతి సమ్పన్నవాదినః॥ 14

శ్లో॥ విజ్ఞానాత్ కర్మణో నాశో విజ్ఞానాద్వాసనాక్షయః।
విజ్ఞానాజ్జన్మనాశోఽపి విజ్ఞానాత్ స్ఫూర్తిరాత్మనః॥ 15

వ్యాఖ్యా:- యావజ్జన్మ తావద్విషయాసక్తిః, యావద్విషయానురాగస్తావత్ కర్మప్రవృత్తిః తస్మాద్ యథా జన్మ న స్యాత్తథా ప్రయతేత ఇతి భాస్కరాదయో వదన్తి। సమ్పన్నవాదినో మహారాజాదయస్తు కర్మక్షయమన్తరేణ వాసనాసమాప్తేరసమ్భవాద్వాసనాసమాప్త్యన్తరం చ జన్మకారికారణాన్తరాభావాత్ జన్మసమాప్తిస్తావత్ కర్మసమాప్త్యధీనా ఇత్యాహుః। యాజ్ఞవల్క్యాదయస్తు జన్మనాశస్య వాసనానాశాధీనత్వాత్ తన్నాశస్య చ కర్మనాశాధీనత్వాత్ స్వత ఏవ కర్మనాశస్యాసంభవాత్ కర్మసమాప్తిం ప్రతి విజ్ఞానస్య కారణతామాశ్రిత్య మతాన్తరముపేక్షన్తే విజ్ఞానాదితి। సదాకారాకారితవృత్తేరేవాత్ర విజ్ఞానశబ్దస్య వాచ్యత్వాత్ తాదృశవృత్తిమన్తరా కర్మక్షయాసమ్భవః। తస్మాత్ కర్మవాసనయోః సమాప్తిం ప్రతి

విజ్ఞానస్య సాక్షాత్ కారణతా, జన్మసమాప్తిం ప్రతి పరమ్పరయా కారణతా। ఆత్మనః స్ఫూర్తిః ఆత్మబోధశ్చ విజ్ఞానస్యైవ ఫలం,తస్యైవ కృతిసాధ్యత్వావగమాద్ ఇత్యాహుః॥

अवतारिका:- वैराग्योदयं विना ज्ञानोदयासम्भवात् तदुदयं विना च वासनादिक्षया-सम्भवाद् वैराग्यमेवोत्तममिष्टसाधनमिति नारदवामदेवादयो वदन्तीत्याह --

श्लो॥ वैराग्याज् ज्ञानसम्पत्तिः वैराग्याद्वासनाक्षयः।
वैराग्यात्कर्मनाशश्च कर्मनाशाज्जनेर्लयः॥ १६

व्याख्या-वैराग्यादिति । वैराग्यं नाम विषयात्यन्तानासक्ति लक्षणम् । परोक्षापरोक्षज्ञानोदयो वासनाक्षयः, कर्मसमाप्तिश्च वैराग्यादेव जायते । जनेर्जन्मनो लयः समाप्तिश्च वैराग्यादेवेति फलनिर्देशः। ज्ञानोदयं वासनाकर्म-समाप्ती च प्रति वैराग्यस्य साक्षात् परम्परया वा कारणता चिन्तनीया । अनन्तमहिमपरमेश्वरमायागुणलावण्यलीलारत्नाकरं गाहमानानां ब्रह्मांशानां जीवानां यथादृष्टमुपस्थितः शुक्तिशङ्खप्रवालमुक्तारत्नलाभः स्वस्वपरमविनोदहेतुरेव भवतीति भावः॥

అవతారికా:- వైరాగ్యోదయం వినా జ్ఞానోదయాసమ్భవాత్ తదుదయం వినా చ వాసనాదిక్షయాసంభవాద్ వైరాగ్యమేవోత్తమమిష్టసాధనమితి నారదవామదేవాదయో వదన్తీత్యాహ -

శ్లో॥ వైరాగ్యాజ్ జ్ఞానసమ్పత్తిః వైరాగ్యాద్వాసనాక్షయః
వైరాగ్యాత్కర్మనాశశ్చ కర్మనాశాజ్జనేర్లయః॥ 16

వ్యాఖ్యా:- వైరాగ్యాదితి। వైరాగ్యం నామ విషయాత్యన్తానాసక్తి లక్షణమ్। పరోక్షాపరోక్ష-జ్ఞానోదయో వాసనాక్షయః, కర్మసమాప్తిశ్చ వైరాగ్యాదేవ జాయతే। జనేర్జన్మనో లయః సమాప్తిశ్చ వైరాగ్యాదేవేతి ఫలనిర్దేశః జ్ఞానోదయం వాసనాకర్మసమాప్తీ చ ప్రతి వైరాగ్యస్య సాక్షాత్ పరమ్పరయా వా కారణతా చిన్తనీయా। అనన్తమహిమ పరమేశ్వర మాయాగుణలావణ్యలీలారత్నాకరం గాహమానానాం బ్రహ్మాంశానాం జీవానాం యథాదృష్ట ముపస్థితః శుక్తిశఙ్ఖప్రవాలముక్తారత్నలాభః స్వస్వపరమవినోద- హేతురేవ భవతీతి భావః॥

अवतारिका:- ननु लिङ्गदेहस्य वासनामयत्वाद् वासनायाश्च असार्वकालिकत्वात् तदभावे लिङ्गसमाप्तौ, तदभावे स्थूलदेहाद्यनुत्पत्त्या सम्भवतीष्टाप्तिरिति आशङ्क्य कर्मक्षयान्तरमन्तरा काचनापि मनोरथपद्धतिर्न फलतीति आचार्यसिद्धान्तसम्मतिमाह --

श्लो।। पुण्यपापक्षयः कर्मक्षयाधीनस्तु जन्मिनाम् ।
पुण्यपापक्षयाधीनः सूक्ष्मदेहक्षयोऽन्तिमः।। १७

व्याख्या- पुण्येति। कर्मसमाप्तिमन्तरा पुण्यपापपरिसमाप्तिर्नास्ति, पुण्यपापपरिसमाप्तिं विना लिङ्गशरीरसमाप्तिर्नास्ति । यावल्लिङ्गशरीरं तावत् स्वरूपप्रत्ययो दुर्लभः। अतः कर्मक्षय एव सर्वतो गरीयान् । तस्मिन् सति जन्मिनां पुण्यपापसमाप्तिः। ततो भोगप्रदभोग्ययोरभावात् वासनामयस्य लिङ्गदेहस्य नाशः। स च चरमः। तत्पदं स्वरूपसम्पदुदयप्रतिबन्धकपदार्थान्तराभावात् । विमतविश्रान्तिस्थाननिर्हृतिमन्तरा कार्यकारणभूतपुण्यपापादिप्रवाहरूपेण विद्यमानत्वात् सप्ताश्रय -देहबीजानष्ट्या न जीवेष्टाप्तिरिति भावः।।

అవతారికా:- నను లిఙ్గదేహస్య వాసనామయత్వాద్ వాసనాయాశ్చ అసార్వకాలికత్వాత్ తదభావే లిఙ్గసమాప్తౌ, తదభావే స్థూలదేహాద్యనుత్పత్త్యా సంభవతీష్టాప్తిరితి ఆశఙ్క్య కర్మక్షయాన్తరమన్తరా కాచనాపి మనోరథపద్ధతిర్న ఫలతీతి ఆచార్య సిద్ధాన్తసమ్మతి-మాహ-

శ్లో।। పుణ్యపాపక్షయః కర్మక్షయాధీనస్తు జన్మినామ్।
పుణ్యపాపక్షయాధీనః సూక్ష్మదేహక్షయోఽన్తిమః।। 17

వ్యాఖ్యా:- పుణ్యేతి । కర్మసమాప్తిమన్తరా పుణ్యపాపపరిసమాప్తిర్నాస్తి, పుణ్యపాపపరిసమాప్తిం వినా లిఙ్గశరీరసమాప్తిర్నాస్తి। యావల్లిఙ్గశరీరం తావత్ స్వరూపప్రత్యయో దుర్లభః । అతః కర్మక్షయ ఏవ సర్వతో గరీయాన్। తస్మిన్ సతి జన్మినాం పుణ్యపాపసమాప్తిః। తతో భోగప్రదభోగ్యయోరభావాత్ వాసనామయస్య లిఙ్గదేహస్య నాశః। స చ చరమః। తత్పదం స్వరూపసమ్పదుదయప్రతిబన్ధకపదార్థాన్తరాభావాత్। విమతవిశ్రాన్తిస్థాననిర్హృతిమన్తరా కార్యకారణభూతపుణ్యపాపాదిప్రవాహరూపేణ విద్యమానత్వాత్ సప్తాశ్రయదేహబీజానష్ట్యా న జీవేష్టాప్తిరితి భావః।।

अवतारिका:- ननु तर्हिपुण्यपापाश्रयकर्मक्षयस्य इष्टसाधनत्वात् तत् क्षयकर-कर्मण्येव प्रयत्नो विधेय इत्याशङ्क्य इष्टापूर्तादिविहितकर्मणां पापक्षयकरत्वेऽपि पुण्यक्षयकरत्वाभावात्तन्मात्रभोगादपि आरोहावरोहयात्रा दुर्वारा इत्याह -

श्लो॥ क्षये साधनबाहुल्यं पापानां निगमोदितम् ।
इष्टापूर्तार्चनातीर्थक्षेत्रदानतपोजपाः ॥ १८

श्लो॥ पुण्यक्षयेऽपि वेदोक्ते प्रवृत्तिर्दुर्लभा नृणाम् ।
स्वर्गादि सुखहेतुत्वात् शेषादिज्योद्भव श्रुतेः॥ १९

व्याख्या- क्षय इति । पुण्यपापक्षये सति भोगप्रदवस्त्वन्तराभावाद्भोगक्षमदेहानुत्पत्तौ सम्भवतीष्टाप्तिः। तत्र पापानां क्षये क्षयार्थं साधनबाहुल्यं शास्त्रे वेदे प्रतिपादितं तदेवाह - इष्टेति । इष्टमग्निहोत्रादि । पूर्तं कूपारामादि । अर्चना देवपितृगुरुप्रभृतीनां पूजा । तीर्थानि गङ्गादीनि, क्षेत्राणि काशीपुष्करप्रभृतीनि, दानानि गोदानादीनि । तपो ब्रह्मचर्यादि धर्मः। जपः प्रणववेदपाठादिः। एतानि पापक्षमकामनयानुष्ठितानि चेत् पापक्षयसाधनानि । फलानुसन्धानापृक्तानि चेत् अन्तःकरणशुद्धिहेतूनि । स्वरूपज्ञानोदये सन्निपात समाप्तेरपेक्षितत्वादेकतर-समाप्तिर्न प्रकृतेष्टसाधनमिति भावः॥

ननु पुण्यक्षयस्यापि मुक्तिं प्रति हेतुत्वे तत्क्षयकरकर्माभावात् अनिर्मोक्ष-प्रसङ्ग इत्याशङ्क्य पापक्षयकरकर्मवत्पुण्यक्षयकरकर्मसत्वे अपि स्रक्चन्दन-वनितादि रुचिरतरविषयभोगलालसानां वज्रप्रस्तरानुपमितहृदयानां तत्र प्रवृत्त्यभाव एवात्मनो देहाभिमानित्वकर इत्याशयेनाह पुण्यक्षयेऽपीति । पुण्यक्षयमन्तरेण मुक्तेर्दुलभत्वात् पापक्षयवत्पुण्यक्षयोऽपि वेदे प्रतिपादितः। पुण्यस्य कर्मणः क्षयो यस्मात्तस्मिन् पुण्यक्षये वेदोक्ते वेदे प्रतिपादितोऽपि तस्मिन् नृणां प्रवृत्तिर्दुर्लभा। अत्यन्ताभावाप्रदर्शनात्परिपक्वहृदयानां सुलभापीत्युक्तम् । तत्राप्रवृत्तौ हेतुः पुण्यं तावत् स्वर्गादि सुखसाधनं भवति, यत्रानन्दकरं नन्दनं पीयूषधारा, सङ्कल्पितपूरकः कल्पतरुः, अभिलषितपारदर्शकं पारिजातसुमं, सन्मान-माननीयानि विमानानि, यत्र निर्जरत्वामरत्वप्राप्तिः, एवंविधस्वर्गप्रवर्तकपुण्य-समाप्तौ अप्रवृत्तिर्न चित्रमित्यर्थः। किञ्च शेषात्पुण्यशेषात् इज्यः उद्भव उत्पत्तिस्त-स्यापि श्रुतेर्वेदादौ श्रवणात् । पुण्यशेषेण श्रोत्रियादिसार्वभौमादिजन्म भवतीति

शास्त्रानुशासनादित्यर्थः। उभयत्र सुखप्रदवस्तुपरित्यागो वास्तवार्थरसविरसाः न अधिकारिणो भवन्तीति भावः॥

**అవతారికా:-** నను తర్హి పుణ్యపాపాశ్రయకర్మక్షయస్య ఇష్టసాధనత్వాత్ తత్ క్షయకర-కర్మణ్యేవ ప్రయత్నో విధేయ ఇత్యాశఙ్క్య ఇష్టాపూర్తాదివిహితకర్మణాం పాపక్షయకరత్వే ఽపి పుణ్యక్షయకరత్వాభావాత్తన్మాత్రభోగాదపి ఆరోహావరోహయాత్రా దుర్వారా ఇత్యాహ -

శ్లో॥ క్షయే సాధనబాహుల్యం పాపానాం నిగమోదితమ్।
ఇష్టాపూర్తార్చనాతీర్థక్షేత్రదానతపోజపాః॥ 18

శ్లో॥ పుణ్యక్షయేఽ పి వేదోక్తే ప్రవృత్తిర్దుర్లభా నృణామ్।
స్వర్గాది సుఖహేతుత్వాత్ శేషాదిజ్యోధ్రువ శ్రుతేః॥ 19

**వ్యాఖ్యా:-** క్షయ ఇతి। పుణ్యపాపక్షయే సతి భోగప్రదవస్త్వన్తరాభావాద్భోగక్షమదేహా నుత్పత్తౌ సమ్భవతీష్టాప్తిః। తత్ర పాపానాం క్షయే క్షయార్థం సాధనబాహుల్యం శాస్త్రే వేదే ప్రతిపాదితం తదేవాహ - ఇష్టేతి । ఇష్టమగ్నిహోత్రాది । పూర్తం కూపారామాది। అర్చనా దేవపితృగురుప్రభృతీనాం పూజా। తీర్థాని గఙ్గాదీని, క్షేత్రాణి కాశీపుష్కర-ప్రభృతీని,దానాని గోదానాదీని।తపో బ్రహ్మచర్యాది ధర్మః।జపః ప్రణవవేదపాఠాదిః। ఏతాని పాపక్షమకామనయానుష్ఠితాని చేత్ పాపక్షయసాధనాని। ఫలానుసన్ధానాపృక్తాని చేత్ అన్తఃకరణశుద్ధిహేతూని । స్వరూపజ్ఞానోదయే సన్నిపాత సమాప్తేరపేక్షితత్వాదేక-తరసమాప్తిర్న ప్రకృతేష్టసాధనమితి భావః॥

నను పుణ్యక్షయస్యాపి ముక్తిం ప్రతి హేతుత్వే తత్క్షయకరకర్మాభావాత్ అనిర్మోక్ష-ప్రసఙ్గ ఇత్యాశఙ్క్య పాపక్షయకరకర్మవత్పుణ్యక్షయకరకర్మసత్త్వే అపి స్రక్చన్దనవనితాది రుచిరతరవిషయభోగలాలసానాం వజ్రప్రస్తరానుపమితహృదయానాం తత్ర ప్రవృత్త్య-భావ ఏవాత్మనో దేహాభిమానిత్వకర ఇత్యాశయేనాహ పుణ్యక్షయేపీతి। పుణ్యక్షయమన్తరేణ ముక్తేర్దుర్లభత్వాత్ పాపక్షయవత్పుణ్యక్షయోఽ పి వేదే ప్రతిపాదితః। పుణ్యస్య కర్మణః క్షయో యస్మాత్తస్మిన్ పుణ్యక్షయే వేదోక్తే వేదే ప్రతిపాదితేఽ పి తస్మిన్ నృణాం ప్రవృత్తి-ర్దుర్లభా। అత్యన్తాభావాప్రదర్శనాత్పరిపక్వహృదయానాం సులభాపీత్యుక్తమ్। తత్రాప్రవృత్తౌ హేతుః పుణ్యం తావత్ స్వర్గాది సుఖసాధనం భవతి, యత్రానన్దకరం నన్దనం పీయూష -ధారా, సఙ్కల్పితపూరకః కల్పతరుః, అభిలషితపారదర్శకం పారిజాతసుమం, సన్మాన

